अथाभ्युपेत्यापि भवं तवेच्छतो ब्रवीमि नार्थस्तव चेष्टितेन मे। न हानवृद्धी न यतः स्वतोऽसतो भवोऽन्यतो वा यदि चास्तिता तयोः ॥ २३ ॥

अथाभ्युपेत्यापीति ॥ मनसश्चेष्टितेनात्मनो नार्थोऽस्तीत्येव तत्प्रपञ्चयति—न हानवृद्धी इति। मे स्त इति योज्यम्। कुत इत्यत आह—न यत इति। यतो यस्मादसत आत्मन्यविद्यमानस्य हानस्य वृद्धेर्वा भव उद्भवः स्वतोऽन्यतो वा हेत्वन्तराद्वा न संभवतीति योजना। यदि वा तयोर्हानवृद्ध्योर्वेद्यात्मन्यस्तिता तथापि तव चेष्टितेन मे नार्थ इति संबन्धः। सिद्धेऽर्थे त्वच्चेष्टाया अकिंचित्करत्वादित्यर्थः ॥ २३ ॥

हीयमानोपचीयमानयोरात्मनि संबन्धानिरूपणाच्च न हानवृद्धी स्त इत्याह—

ध्रुवा ह्यनित्याश्च न चान्ययोगिनो मिथश्च कार्यं न च तेषु युज्यते। अतो न कस्यापि हि किंचिदिष्यते स्वयं च तत्त्वं न निरुक्तिगोचरम् ॥ २४ ॥

ध्रुवा इति ॥ ध्रुवाः स्थिराः कूटस्था अनित्याः क्षणिकाश्च पदार्था हि निश्चितमन्ययोगिनो न भवन्ति, स्थिराणामविकारित्वात्क्षणिकानामन्यसंबन्धकालपर्यन्तमवस्थानासंभवादित्यर्थः। मिथश्चान्योन्यमपि स्थिरास्थिरयोर्न संबन्धित्वं संभवति, संबन्धस्य संबन्धिसंबद्धत्वविकल्पासहत्वादित्यर्थः। अतएव तेषु न कार्यं किमपि युज्यते घटते। संबन्धिताविकारभेदसत्त्वनिराकरणमुपसंहरति—अत इति। न किमपि कस्यापि संबन्धि परमार्थत इष्यत इत्यर्थः। ननु कथमात्मनोऽन्यसंबन्धाभावो वेदान्तवाक्यप्रमाणं प्रति प्रमेयत्वोपगमादित्यत आह—स्वयं चेति। तत्त्वमात्मस्वरूपं स्वयं निरुपाधिकं न निरुक्तेर्वाक्यस्य मुख्यया वृत्त्या गोचरो विषयः शब्दप्रवृत्तिनिमित्तधर्माभावात्किंतु लक्षणया शब्दस्य तत्र पर्यवसानमपेक्ष्य वेदान्तप्रमेयत्वं तस्याङ्गीकृतमिति न विरोध इत्यर्थः. ॥ २४ ॥

सदेवं दुर्निरूपाद्वैतसाक्षिणोऽसङ्गाद्वयानन्दरूपस्य स्वप्रकाशतया प्रकाश-

मानं स्वरूपं श्रुतियुक्तिभ्यां निश्चित्य पुमान् कृतकृत्यो भवतीति द्वैताभास-निराकरणफलमुपसंहारव्याजेनाह—

समं तु तस्मात्सततं विभातवद्द्वयाद्विमुक्तं सदसद्विकल्पितात्। निरीक्ष्य युक्त्या श्रुतितस्तु बुद्धिमानशेषनिर्वाणमुपैति दीपवत् ॥ २५ ॥

समं त्विति ॥ सत्त्वासत्त्वाभ्यां विकल्पिताद्द्वयाद्द्वैतावभासात्सततं विमुक्तमिति संबन्धः। सततं समं विभातवत्प्रकाशमानमिति योजना। दीपवत्सहसैवाशेषस्य बन्धस्य निर्वाणं परिसमाप्तिमुपैति। निरीक्षणनिर्वाणयोर्न व्यवधानं किमप्यस्तीत्यर्थः ॥ २५ ॥

उक्तलक्षणस्यात्मतत्त्वस्य निरीक्षणं किं विषयत्वेनाविषयत्वेन वेति जिज्ञासायामविषयत्वेनैवेत्याह—

अवेद्यमेकं यदनन्यवेदिनां कुतार्किकाणां च सुवेद्यमन्यथा। निरीक्ष्य चेत्थं त्वगुणग्रहोऽगुणं न याति मोहं ग्रहदोषमुक्तितः ॥ २६ ॥

अवेद्यमिति ॥ सर्वसाक्षिप्रत्यगात्मनोऽन्यन्न भवत्यद्वयं ब्रह्मेति ये वेदिनस्तेषामनन्यवेदिनामवेद्यम्। अन्यथा भेदेन विषयतया वेदिनां कुतार्किकाणां सुवेद्यं परिच्छिन्नतया सुज्ञेयम्। शास्त्रयुक्तिविचारप्रयासं विना स्वमत्यनुसारेण सुखबोधमित्यर्थः। गुणेषु सत्त्वादिषु सविकारेषु ग्रहोऽभिनिवेशो यस्य स गुणग्रहः। न गुणग्रहोऽगुणग्रहः पुमान्देहाद्यभिमानहीन इति यावत्। अगुणं निर्विशेषमात्मतत्त्वमित्थमवेद्यमित्याद्युक्तरूपं निरीक्ष्यालोच्य चकारादपरोक्षतयानुभूय मोहं न याति। तत्र हेतुमाह—ग्रहदोषमुक्तित इति। ग्रहरूपाद्दोषान्मुक्तितो मुक्तेः मोहहेत्वज्ञानतत्कार्यबाधादित्यर्थः ॥ २६ ॥

कस्मादेवं महता प्रयत्नेनाविषयतया ब्रह्मात्मनो वेदनमिष्यते तत्राह—

अतोऽन्यथा न ग्रहनाश इष्यते विमोहबुद्धेर्ग्रह एव

**कारणम् । ग्रहोऽप्यहेतुस्त्वनलस्त्वनिन्धनो यथा प्रशान्तिं परमां तथा व्रजेत् ॥ २७ ॥**

अतोऽन्यथेति ॥ अत उक्तविधादात्मज्ञानादन्यथान्यस्माद्वेत्वन्तरात्प्रकारान्तराद्वा न ग्रहनाशो मिथ्याज्ञाननिवृत्तिरिष्यते । 'नान्यः पन्था विद्यतेऽयनाये'ति श्रुतेः । मास्तु तर्हि ग्रहनाश इत्यत आह—विमोहेति । ग्रहे सकारणे सति विमोहबुद्धेर्देहगेहादावहंममेत्याद्यभिनिवेशधियः सर्वानर्थबीजभूताया अनिवृत्तिः स्यादित्यनिर्मोक्षप्रसङ्ग इत्यर्थः । ननु भवतु ग्रहनाशान्मोहनाशो ग्रहनाश एव कुतः ब्रह्मात्मज्ञानादितिचेन्न । ज्ञानादज्ञानस्यैव निवृत्तिसंभवाद्ग्रहनिवृत्तिकारणमन्यदेष्टव्यमित्याशङ्क्याज्ञानकार्यत्वाद्ग्रहस्य तन्निवृत्तौ स्वयमेव निवर्तत इति सदृष्टान्तमाह—ग्रहोऽपीति । अहेतुर्निरुपादानः उपादाननिवृत्तौ पुनः प्ररोहहेत्वभावात्परमां निरतिशयां शान्तिमुपशान्तिं मोक्षलक्षणां व्रजेदित्यर्थः ॥ २७ ॥

प्रकरणसमाप्तौ गुरुनमस्काररूपं मङ्गलमाचरति—

**विमथ्य वेदोदधितः समुद्धृतं सुरैर्महाब्धेस्तु यथा महात्मभिः । तथाऽमृतं ज्ञानमिदं हि यैः पुरा नमो गुरुभ्यः परमीक्षितं च यैः ॥ २८ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दभगवत्पूज्य-
शिष्यस्य श्रीशंकरभगवतः कृतिः सकलवेदो-
पनिषत्सारोपदेशसाहस्री समाप्ता ॥

विमथ्येति ॥ यथा सुरैर्देवैर्महात्मभिर्महाब्धेः क्षीरसागरादमृतं समुद्धृतं पुरा पूर्वं तथा यैर्महात्मभिः गुरुभिर्वेदरूपादुदधितो विमथ्यालोड्येदं प्रकरणरूपेण मया प्रकाशितं ज्ञानामृतं समुद्धृतं पुरा पूर्वं तथा यैः परमात्मतत्त्वं चेक्षितमपरोक्षीकृतं तेभ्यो गुरुभ्यो नम इति योजना । अथवा यैर्गुरुभिर्निमित्तभूतैर्मया परं चेक्षितमिति योजना । 'तस्मादात्मज्ञं ह्यर्चयेद्भूतिकाम' इत्यादिश्रुतेः । 'निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् । अनुव्रजाम्यहं नित्यं पूयेयमङ्घ्रिरेणुभि' रिति भगवद्वचनाच्च युक्तमत्र गुरुसुजनपूजनमित्यर्थः ॥ २८ ॥

उपदेशसहस्रीयं विवृता हि महात्मभिः।
श्रद्धावेशान्मयाप्यस्याः पदयोजनिका कृता ॥ १ ॥

समस्तवेदार्थरहस्यगद्य-
पद्यप्रबन्धार्थतथावबोधः।
कथं नु मादृक्षतिविभ्रितः स्या-
द्यापि भक्त्याहमिहास्मि तुष्टः ॥ २ ॥

हृद्यन्तराविष्कृतरामभूर्ते-
स्तया गुरूणां विपुलप्रसादात्।
यथाकथंचिद्रचितेन विष्णु-
रनेन तुष्यत्वखिलान्तरात्मा ॥ ३ ॥

इति श्रीमच्छंकराचार्यकृतोपदेशसाहस्र्याः
पदयोजनिकानामटीका कृष्णतीर्थशि-
ष्यरामतीर्थविरचिता समाप्ता ॥

